॥ ॐ ॥

# संक्षिप्त सुंदरकांड

(वाल्मीकि रामायण)

अथ ध्यानम्

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्
प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशांतये ॥
अगजानन पद्मार्कं गजाननमहर्निशम्
अनेकदंतं भक्तानां एकदंतमुपास्महे ॥

याकुंदेंदु तुषारहारधवळा यशुभ्रवस्त्रावृता
या वीणावरदंडमंडितकरा या श्वेत पद्माशना ।
या ब्रह्मात्युतशंकरप्रभृतिभिः देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाद्याफहा ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम्
आरुह्य कविता शाखां वंदे वाल्मीकि कोकिलम् ।
वाल्मीकेर्मुनिसिंहस्य कविता वनचारिणः
श्रुण्वन् रामकधानादं को न याति परमांगतिम् ॥

अंजनानंदनं वीरं जानकी शोकनाशनम्
कपीशम् अक्ष हंतारं वंदे लंका भयंकरम्
अमीषकृतमार्तांडं गोष्पदीकृत सागरम्
तृणीकृत दशग्रीवं आंजनेयं नमाम्यहम्

यत्र यत्र राघुनाधकीर्तनं तत्र तत्र कृतमस्तकांजलिम्
भाष्पवारि परिपूर्णलोचनं मारुतिं नमत राक्षसांतकम् ॥

ॐ

# संक्षिप्त सुंदरकांड

(वाल्मीकि रामायण श्लोकगळु)

ततो रावण नीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुम् चारणाचरितेपथिः ॥ १ ॥

दुष्करं निष्प्रतिद्वंदम् चिकीर्षन् कर्म वानरः ।
समुदग्र सिरोग्रीवो गवांपतिरिवाबभौ ॥ २ ॥

स सूर्याय महेंद्राय पवनाय स्वयंभुवे ।
भूतेभ्यश्चांजलिम् कृत्वा चकार गमनेमतिं ॥ ३ ॥

वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यधा राघव निर्मुक्तः शरः श्वसनविक्रमः ॥ ४ ॥

गच्छेत् तद्वद्गमिष्यामि लंकां रावण पालितां ।
न हि द्रक्ष्यामि यदितां लंकायां जनकात्मजाम् ॥ ५ ॥

अनेनैव हि वेगेन गमिष्यामि सुरालयं ।
यदि वा त्रिदिवे सीतां न द्रक्ष्याम्यकृतश्रमः ॥ ६ ॥

बद्ध्वा राक्षस राजानम् आनयिष्यामि रावणम् ।
सर्वधा कृतकार्योहमेष्यामि सह सीतया ॥
उत्पपाताध वेगेन वेगवान विचारयन् ॥॥ ७ ॥

प्लवमानं तु तं दृष्ट्वा प्लवंगं त्वरितं तदा ।
ववर्षुः पुष्प वर्षानि देवगंधर्वदानवाः ॥ ८ ॥

ततापि नहि तं सूर्यं प्लवंतं वानरोत्तमम् ।
सिषेवे च तदा वायु रामकार्यर्धसिद्धये ॥ ९ ॥

इक्ष्वाकुकुलमानार्धी चिंतयामास सागरः ।
अहमिक्ष्वाकुनाधेन सगरेण विवर्धितः ॥
इक्ष्वाकुसचिवश्चायं नावसीदतुमर्हति ॥॥ १० ॥

इति कृत्वा मतिं साध्वीं समुद्रश्चन्नमंभसी ।
हिरण्यनाभं मैनाकं उवाच गिरिसत्तमम् ॥ ११ ॥

सलिलादूर्ध्वमुत्तिष्ठ तिष्ठ त्वेष कपिस्त्वयि ।
अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ॥ १२ ॥

प्रीतोहृष्टमना वाक्यम् अब्रवीत् पर्वतः कपिं ।
मानुषं धारयन् रूपमात्मनश्शिखरे स्थितः ॥ १३ ॥

दुष्करं कृतवान् कर्म त्वमिदं वानरोत्तम ।
निपत्य मम शृंगेषु विश्रमस्व यथासुखम् ॥ १४ ॥

श्रमं मोक्षय पूजांच गृहाण कपिसत्तम ।
प्रीतिं च बहुमन्यस्व प्रीतोस्मि तव दर्शनात् ॥ १५ ॥

एवमुक्तः कपिश्रेष्ठः तं नगोत्तममब्रवीत् ।
प्रीतोस्मि कृतमातिथ्यं मन्युरेषोपनीयताम् ॥ १६ ॥

त्वरते कार्यकालो मे अहश्चाप्यमिहंतरे ।
प्रतिज्ञा च मयादत्ता न स्थातव्यमिहंतरे ॥ १७ ॥

इत्युक्त्वा पाणिना शैलम् आलभ्य हरिपुंगवः ।
जगामाकाशमाविस्य वीर्यवान् प्रहसन्निव ॥ १८ ॥

तद्वितीयम् हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
प्रशशंसु सुरास्सर्वे सिद्धाश्च परमर्षयः ॥ १९ ॥

समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ।
प्लवमानं हनूमंतं आवृत्येदमुवाच ह ॥ २० ॥

मम भक्षः प्रदिष्टत्वम् ईश्वरै र्वानरर्षभ ।
अहं त्वां भक्षयिष्यामि प्रविशेदम् ममाननम् ॥ २१ ॥

तदृष्ट्वा व्यादितम् त्वास्यं वायुपुत्रः सुबुद्धिमान् ।
दीर्घजिह्वम् सुरसया सुघोरं नरकोपमम् ॥
सु संक्षिप्यात्मनः कायं बभूवांगुष्ठमात्रकः ॥॥ २२ ॥

सोभिपत्याशु तद्वक्त्रं निष्पत्य च महाजनः ।
अन्तरिक्षे स्थितः श्रीमान् इदं वचनमब्रवीत् ॥२३ ॥

फ्रविष्टोस्मि हि ते वक्त्रं दाक्षायणि नमोस्तुते ।
गमिष्ये यत्र वैदेहि सत्यं चासीद्वरस्तवः ॥ २४ ॥

तत् तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
साधु साध्विति भूतानि प्रशशंसु स्तदा हरिम् ॥ २५ ॥

प्लवमानंतु तं दृष्ट्वा सिंहिकानाम राक्षसी ।
घनराजीव गर्जंती वानरं समभिद्रवत् ॥ २६ ॥

ततस्तस्या नखैस्तीक्ष्णैः मर्माण्युत्कृत्य वानरः ।
उत्पपाताध वेगेन मनस्संपात विक्रमः ॥ २७ ॥

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकां ।
भूतान्याकाश चारीणि तमूचुः प्लवगोत्तमं ॥ २८ ॥

भीममद्यकृतं कर्म महत् सत्वं त्वयाहतं ।
साधयार्ध मभिप्रेतम् अरिष्टम् प्लवतां वर ॥ २९ ॥

स तु वीर्यव्रतां श्रेष्ठः प्लवतामपि चोत्तमः ।
जगाम वेगवान् लंकां लंघयित्वा महोदधिं ॥ ३० ॥

ततस्स चिंतयामास मुहूर्तं कपि कुंजरः ।
गिरिशृंगे स्थितस्तस्मिन् रामस्याभ्युदये रतः ॥ ३१ ॥

लक्ष्यालक्ष्येण रूपेण रात्रौ लंकापुरी मया ।
प्रवेष्टुं प्राप्तकालं मे कृत्यंसाधयितुं महत् ॥ ३२ ॥

रावणस्य पुरीं रात्रौ प्रविस्य सुदुरासदाम् ।
विचिन्वन् भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ३३ ॥

अथ सा हरिशार्दूलं प्रविशंतं महाबलम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ ३४ ॥

सा तं हरिवरं दृष्ट्वा लंका रावणपालिता ।
मुंचमाना महानादम् अब्रवीत् पवनात्मजम् ॥ ३५ ॥

कस्त्वं केनच कार्येण इह प्राप्तो वनालय ।
कथयस्वेह यत्तत्वं यावत् प्राणा धरंति ते ॥ ३६ ॥

अबभाषेध मेधावी सत्ववान् प्लवगर्षभः ।
द्रक्ष्यामि नगरीं लंकां साट्टप्राकार तोरणाम् ॥
इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥। ३७ ॥

दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यधागतम् ॥ ३८ ॥

ततः कृत्वा महानादं सा वै लंका भयावहम् ।
तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३९ ॥

ततस्स कपिशार्दूलो लंकया ताडितो भृशम् ।
ननाद सुमहानादं वीर्यवान् पवनात्मजः ॥ ४०॥

ततस्संवर्तयामास वामहस्तस्यसोंगुळीः ।
मुष्टिनाभिजघानैनां हनुमान् क्रोधमूर्छितः ॥ ४१ ॥

पपात सहसा भूमौ विकृतानन दर्शना ।
उवाचा गर्वितं वाक्यं हनुमंतं प्लवंगमम् ॥
प्रसीद सु महाभावो त्रायस्व हरिसत्तम ॥। ४२ ॥

निर्जिताहं त्वया वीरा विक्रमेण महाबला ।
इदं तु तध्यं शृणुवै ब्रुवंत्या मे हरीश्वर ॥ ४३ ॥

स्वयंभुवा पुरा दत्तं वरदानं यथा मम ।
यदा त्वां वानरः कश्चित् विक्रमाद्वशमानयेत् ॥ ४४ ॥

तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।
स हि मे समयसौम्य प्राप्तोद्य तव दर्शनात् ॥ ४५ ॥

तत्प्रविस्य  हरिश्रेष्ठ् पुरीं रावण पालिताम् ।
विधत्स्व सर्व कार्याणि यानि यानीह वांछसि ॥ ४६ ॥

स निर्जित्य पुरीं श्रेष्ठाम् लंकां तां कामरूपिणिम् ।
विक्रमेण महातेजा हनुमान् कपिसत्तमः ॥ ४७ ॥

चक्रेधपादं सव्यं च शत्रूणां स तु मूर्धनि ।
प्रविश्य नगरीं लंकां कपिराजहितंकरः ॥ ४८ ॥

भवनाद्भवनं गछचन् ददर्श पवनात्मजः ।
विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ४९ ॥

न त्वेव शीतां परमाभिजातां
पधि स्थिते राजकुले प्रजाताम् ।
लतां प्रपुल्लामिव साधुजातां
ददर्श तन्वीं मनसाभिजाताम् ॥ ५० ॥

ततो पश्यत् कुधासीनं नानावर्णांबरस्रजम् ।
सहस्रं वरनारीणाम् नानावेषविभूषितम् ॥ ५१ ॥

न चा कुलीना न च हीनरूपा
ना दक्षिणा नानुपचारयुक्ता ।
भार्या भवत्तस्य न हीनसत्वा
न चापि कांतस्य न कामनीया ॥ ५२ ॥

पुनश्च सो चिंतय दार्तरूपो
ध्रुवं विशिष्टा गुणतोहि सीता ।
अधाय मस्यां कृतवान् महात्म
लंकेश्वरः कष्टमनार्य कर्म ॥ ५३ ॥

तत्र दिव्योपमं मुख्यं  स्फाटिकं रत्नभूषितम्  ।
अवेक्षमाणो हनुमान् ददर्श शयनाशनम् ॥ ५४ ॥

तासामेकांत विन्यस्ते शयनां शयने शुभे ।
ददर्श रूपसंपन्नाम् अपराम् स कपिः स्त्रियम् ॥ ५५ ॥

स तां दृष्ट्वा महाबाहुः भूषितां मारुतात्मजः ।
तर्कयामास सीतेति रूपयौव्वन संपदा ॥
हर्षेण महता युक्तो ननंद हरियूथपः ॥। ५६ ॥

अवधूय च तां बुद्धिं बभूवास्थित स्तदा ।
जगाम चापरां चिंतां सीतां प्रति महाकपिः ॥ ५७ ॥

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलंकर्तुं न पानमुपसेवितुम् ॥
अन्येयमिति निश्चित्य भूयस्तत्र चचार सः ॥। ५८ ॥

राक्षस्यो विविधाकारा विरूपा विकृता स्तधा ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ ५९ ॥

रूपेणा प्रतिमा लोके वरा विद्याधर स्त्रियः ।
दृष्टा हनुमता तत्र नतु राघवनंदिनी ॥ ६० ॥

नागकन्या वरारोहाः पूर्णचंद्र निभाननाः ।
दृष्टा हनुमता तत्र न तु सीता सुमध्यमा ॥ ६१ ॥

प्रमध्य राक्षसेंद्रेण नाग कन्या बलाद्धृताः ।
दृष्टा हनुमता तत्र न सा जनकनंदिनी ॥ ६२ ॥

अदृष्ट्वा जानकीं सीताम् अब्रवीद्वचनं कपिः ।
न च शक्ष्यमहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥ ६३ ॥

यावत् सीतां हि पश्यामि राम पत्नीं यशस्विनीम् ।
तावदेतां पुरीम् लंकां विचिनोमि पुनः पुनः ॥ ६४ ॥

अशोक वनिका चेयं दृश्यते य महाद्रुमा ।
इमामधिगमिष्यामि न हीयं विचिता मया ॥ ६५ ॥

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्यताम् ।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ ६६ ॥

स पुष्पिताग्रां रुचिरां तरुणांकुर पल्लवाम् ।
तामारुह्य महबाहुः शिंशुपां पर्णसंवृताम् ॥ ६७ ॥

इतो द्रक्ष्यामि वैदेहीं रामदर्शन लालसाम् ।
इतश्चेतश्च दुःखार्तां संपतंतीं यदृच्छया ॥ ६८ ॥

एवं तु मत्वा हनुमान् महात्मा
प्रतीक्षमानो मनुजेंद्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं
सु पुष्पिते पर्णघने निलीनः ॥ ६९ ॥

ततो मलिन संवीतां राक्षसीभि समावृताम् ।
उपवासकृशां दीनां निश्वसंतीं पुनः पुनः ॥
ददर्श शुक्लपक्षादौ चंद्ररेखामिवामलाम् ॥ ७० ॥

तां समीक्ष्य विशालाक्षीं राजपुत्री मनिंदिताम् ।
तर्कयामास सीतेति कारणै रुपपाधिभिः ॥ ७१ ॥

अस्या देव्या यथारूपम् अंगप्रत्यंग सौष्ठवम् ।
रामस्य च यथारूपं तस्येयमसितेक्षणा ॥ ७२ ॥

अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ७३ ॥

दुष्करं कृतवान् रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ७४ ॥

यदि रामस्समुद्रांतां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ ७५ ॥

नमस्कृत्वाच रामाय लक्ष्मणाय च वीर्यवान् ।
सीता दर्शन संहृष्ठो हनुमान् संवृतोभवत् ॥ ७६ ॥

षडंग वेद विदुषां क्रतु प्रवर याजिनां ।
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ ७७ ॥

अध मंगळवादित्रैः शब्दैश्श्रोत्रमनोहरैः ।
प्राबुध्यत महाबाहुः दशग्रीवो महाबलः ॥ ७८ ॥

स सर्वाभरणैर्युक्तो बिभ्रत् श्रियमनुत्तमाम् ।
अशोकवनिकामेव प्राविशत् संततद्रुमाम् ॥ ७९ ॥

तस्मिन्नेव ततः काले राजपुत्री त्वनिंदिता ।
रूपयौव्वनसंपन्नं भूषणोत्तमभूषितम् ॥ ८० ॥

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदळी यधा ॥ ८१ ॥

स तां पतिव्रतां दीनां निरानंदां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैः न्यदर्शयत रावणः ॥ ८२ ॥

कामये त्वां विशालाक्षी बहुमन्यस्व मां प्रिये ।
सर्वांगगुणसंपन्ने सर्वलोकमनोहरे ॥ ८३ ॥

तृणमंतरः कृत्वा प्रत्युवाच  शुचिस्मिता  ।
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥ ८४ ॥

साधु धर्म मवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथान्येषाम् दारा रक्ष्या निशाचर ॥ ८५ ॥

प्रसादयस्व त्वं चैनं शरणागत वत्सलम् ।
मां चास्मै प्रयतो भूत्वा निर्यातयितु मर्हसि ॥ ८६ ॥

एवं हि ते भवेत् स्वस्ति संप्रदाय रघूत्तमे ।
अन्यथा त्वं हि कुर्वाणो वधं प्राप्यसि रावण ॥ ८७ ॥

सीतया वचनं श्रुत्वा परुषं राक्षसाधिपः ।
प्रत्युवाच ततस्सीतां विप्रियं प्रियदर्शनाम् ॥ ८८ ॥

परुषाणिह वाक्यानि यानि यानि ब्रवीषिमाम् ।
तेषु तेषु वधो युक्तः तव मैथिलि दारुणः ॥ ८९ ॥

द्वौ मासौ रक्षितव्यौ मे यो वधिस्ते मयाकृतः ।
ततश्शयनमारोह मम त्वं वरवर्णिनी ॥ ९० ॥

ऊर्ध्वं द्वाभ्यां तु मासाभ्यां भर्तारं मामनिछ्छतीम् ।
मम त्वां प्रातराशार्थम् आरभंते महानने ॥ ९१ ॥

तधा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ।
प्रतिलोमानु लोमैश्च सामदानादि भेदनैः ॥
अवर्जयत वैदेहीम् दंडस्योद्यमनेन च ॥। ९२ ॥

इत्युक्त्वा मैधिलीम् राजा रावणश्शत्रुरावणः ।
संदिश्य च ततस्सर्वा राक्षसीर्निर्जगाम ह ॥ ९३ ॥

ततस्सीतामुपगम्य राक्षस्यो विकृताननः ।
परुषं परुषानर्हाम् ऊचुस्तां वाक्यमप्रियम् ॥ ९४ ॥

त्रैलोक्य वसुभोक्तारं रावणम् राक्षसेश्वरं ।
भर्तारमुपसंगम्य विहारस्व यधासुखम् ॥ ९५ ॥

राक्षसीनाम् वच श्रुत्वा सीता वचनमब्रवीत् ।
दीनोवा राज्यहीनोवा यो मे भर्ता स मे गुरुः ॥

तं नित्यमनुरक्तास्मि यधा सूर्यं सुवर्चला ॥ ९६ ॥

सा भाष्पमपमार्जंती शिंशुपां तामुपागमत् ॥ ९७ ॥

ततस्तां शिंशुपां सीता राक्षसीभिसमावृता ।
अभिगम्य विशालाक्षी तस्थौ शोक परिप्लुता ॥ ९८ ॥

तधा तासां वदंतीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ ९९ ॥

जीवितं त्यक्तुमिच्चामि शोकेन महता वृता ।
राक्षसीभिश्च रक्ष्यंत्या रामो नासाद्यते मया ॥ १०० ॥

सीतां ताभिरनार्याभिः दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा शयना वाक्यमब्रवीत् ॥ १०१ ॥

आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ १०२ ॥

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या जयायच ॥ १०३ ॥

स्वप्ने चाद्य मया दृष्टा सीता शुक्लांबरावृता ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥
रामेण संगता सीता भास्करेण प्रभा यथा ॥॥ १०४ ॥

एवं स्वप्ने मया दृष्टो रामो विष्णु पराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ १०५ ॥

न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः ।
राक्षसैर्वापि चान्यैर्याः स्वर्गः पापजनैरिव ॥ १०६ ॥

राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ।
प्रणिपाता प्रसन्नाहि मैथिली जनकात्मजा ॥
अलमेषा परित्रातुं राक्षस्यो महता भयात् ॥॥ १०७ ॥

शोकाभितप्ता बहुधा विचिंत्या
सीताथ वेण्युद्ग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्रम्
अहं गमिष्यामि यमस्य मूलम् ॥ १०८ ॥

उपस्थिता सा मृदु सर्वगात्री
शाखां गृहीत्वाथ नगस्य तस्य ।
तस्यास्तु रामं प्रविचिंतयंत्या
रामानुजं स्वं च कुलं शुभांग्याः ॥ १०९ ॥

शोकानिमित्तानि तथा बहूनि
धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः
पुरापि सिद्धान्युपलक्षितानि ॥ ११० ॥

हनुमानपि विश्रांतः सर्वं शुश्राव तत्वतः ।
सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १११ ॥

अनेन रात्रि शेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ ११२ ॥

एवं बहुविधां चिंतां चिंतयित्वा महामतिः ।
संश्रवे मधुरं वाक्यं वैदेह्य व्याजहारह ॥ ११३ ॥

राजा दशरथो नाम रथ कुंजरवाजिमान् ।
पुण्यशीलो महकीर्तिः इक्ष्वाकूणाम् महायशाः ॥ ११४ ॥

तस्य पुत्रः प्रियो ज्येष्ठः ताराधिप निभाननः ।
रामो नाम विषेषङ्यः श्रेष्ठस्सर्वधनुष्मताम् ॥ ११५ ॥

तस्य सत्याभिसंधस्य वृद्धस्य वचनात् पितुः ।
सभार्यस्सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ ११६ ॥

जनस्थान वधं श्रुत्वा हतौ च खरदूषणौ ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥
वंचयित्वा वने रामं मृगरूपेण मायया ॥। ११७ ॥

स मार्गमाणस्तां देवीं रामस्सीतामनिंदिताम् ।
असमाद वने मित्रं सुग्रीवं नाम वानरम् ॥ ११८ ॥

सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ।
दिक्षुसर्वासु तां देवीं विचिन्वंति सहस्रशः ॥ ११९ ॥

अहं संपाति वचनात् शतयोजनमायतम् ।
अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः ॥ १२० ॥

यथा रूपं यथा वर्णां यथा लक्ष्मीं च निश्चिताम् ।
अश्रौषम् राघवस्याहं सेयमासादिता मया ॥ १२१ ॥

जानकी चापि  तत् श्रुत्वा परं विस्मयमागता ।
ततश्शाखांतरे लीनं दृष्ट्वा चलित मानसा ॥
वेष्टितार्जुनवस्त्रं तं विद्युत् संघात पिंगळं ॥॥ १२२ ॥

नमोस्तु वाचस्पतये सवज्रिणे
स्वयंभुवे चैव हुताशनायच ।
अनेन चोक्तं यदिदं ममाग्रतो
वनौकसा तच्च तथास्तु नान्यथा ॥ १२३ ॥

सोव तीर्य द्रुमात् तस्मात् विद्रुम प्रतिमाननः ।
विनीत वेषः कृपणः प्रणिपत्योपसृत्य च ॥ १२४ ॥

तामब्रवीन् महातेजा हनुमान् मारुतात्मजः ।
शिरस्यंजलिमाधाय सीतां मधुरयागिरा ॥ १२५ ॥

का त्वं भवसि रुद्राणां मरुतां वा वरानने ।
वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ १२६ ॥

सीता त्वमसि भद्रं ते तन्म माचक्ष्य पृच्चतः ।
यथा हि तव दैन्यं रूपं चाप्यति मानुषम् ॥
तपसा चान्वितो वेषः त्वं राममहिषी ध्रुवम् ॥॥ १२७ ॥

सा तस्य वचनं श्रुत्वा रामकीर्तन हर्षिता ।
उवाच वाक्यं वैदेही हनूमंतं द्रुमाश्रितम् ॥ १२८ ॥

दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम नाम्नाहं भार्या रामस्य धीमतः ॥ १२९ ॥

वसतो दंडकारण्ये तस्याहममितौजसः ।
रक्षसा पहृता भार्या रावणेन दुरात्मना ॥ १३० ॥

द्वौ मासौ तेन मे काले जीवितानुग्रहः कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ १३१ ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान् हरियूथपः ।
दुःखाद्दुःखाभिभूतायाः सांत्वमुत्तरमब्रवीत् ॥ १३२ ॥

अहं रामस्य संदेशात् देवी दूतस्तवागतः ।
वैदेही कुशली रामः त्वां च कौशलमब्रवीत् ॥ १३३ ॥

तया समागते तस्मिन् प्रीतिरुत्पादिताध्भुता ।
परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ १३४ ॥

पृच्चामि त्वां हरिश्रेष्ठा प्रिया रामकथा हि मे ।
गुणान् रामस्य कथय प्रियस्य मम वानर ॥ १३५ ॥

श्रोत्रानुकूलैर्वचनैः तदा तां संप्रहर्षयत् । १३६ ॥

आदित्य इव तेजस्वी लोककांतश्शशी यथा ।
राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा ॥ १३७ ॥

विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः ।
सत्यवादी मधुरवाक् देवो वाचस्पतिर्यथा ॥ १३८ ॥

रूपवान् सुभगश्श्रीमान् कंदर्प इव मूर्तिमान् ।
स्थानक्रोधः प्रहर्ता च श्रेष्टो लोके महारथः ॥
बाहुच्चायामवष्टभ्दो यस्य लोको महात्मनः ॥ १३९ ॥

तेनाहं प्रेषितो दूतः त्वत्सकाशमिहागतः ।
तद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत् ॥ १४० ॥

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् ।
उवाच वचनं सांत्वं इदं मधुरयागिरा ॥ १४१ ॥

क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणाम् नराणां च कथमासीत् समागमः ॥ १४२ ॥

यानि रामस्य लिंगानि लक्ष्मणस्य च वानर ।
तानि भूयस्समाचक्ष्य न मां शोकस्समा विशेत् ॥ १४३ ॥

एवमुक्तस्तु वैदेह्या हनुमान् मारुतात्मजः ।
ततो रामं यथा तत्वं आख्यातु मुपचक्रमे ॥ १४४ ॥

रामः कमलपत्राक्षः सर्व सत्व मनोहरः ।
रूपदाक्षिण्य संपन्नः प्रसूते जनकात्मजे ॥ १४५ ॥

तेजसादित्य संकाशः क्षमया पृथिवी समः ।
बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ १४६ ॥

रक्षिता जीवलोकस्य  स्वजनस्याभिरक्षिता ।
रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतप ॥ १४७ ॥

रामोभामिनि लोकस्य चातुर्वर्णस्य रक्षिता ।
मर्यादानांच लोकस्य कर्ता कारयिता च सः ॥ १४८ ॥

अर्चिष्मा नर्चितोत्यर्थं ब्रह्मचर्य व्रते स्थितः ।
साधूनां मुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १४९ ॥

राजविद्या विनीतश्च ब्राह्मणानामुपासिता  ।
श्रुतवान् शीलसंपन्नो विनीतश्च परंतपः ॥ १५० ॥

यजुर्वेद विनीतश्च वेदविद्भिस्सुपूजितः ।
धनुर्वेदेच वेदेषु वेदांगेषु च निष्ठितः ॥ १५१ ॥

सत्यधर्मपरश्श्रीमान् संग्रहानुग्रहे रतः ।
देशकाल विभागज्ञः सर्वलोक प्रियं वदः ॥ १५२ ॥

भ्राता च तस्य द्वैमात्रः सौमित्रि रपराजितः ।
अनुरागेण रूपेण गुणैश्चैव तथाविथः ॥ १५३ ॥

विचिन्वंतौ महीं कृत्स्नाम् अस्माभि रभि संगतौ ।
त्वामेव मार्गमाणौ तौ विचरंतौ वसुंधराम् ॥ १५४ ॥

रामसुग्रीवयोरैक्यं देव्येवं समजायत ।
हनूमंतं च मां विद्धि तयोर्दूत मिहागतं ॥ १५५ ॥

विश्वासार्थं तु वैदेही भर्तुरुक्ता मया गुणाः ।
अचिराद्राघवो देवी त्वामितो नयितानघे ॥ १५६ ॥

एवं विश्वासिता सीता हेतुभिश्शोककर्शिता ।
उपपन्नै रभिज्ञानैः दूतं तमव गच्चति ॥ १५७ ॥

अतुलं च गता हर्षं प्रहर्षेण च जानकी ।
नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानंदजं जलम् ॥ १५८ ॥

वानरोहं महाभागे दूतो रामस्य धीमतः ।
रामानांकितं चेदं पश्य देव्यंगुळीयकम् ॥ १५९ ॥

इत्युक्त्वा प्रददौ तस्ये सीतायै वानरोत्तमः ।
गृहीत्वा प्रेक्ष्यमाणा सा भर्तुः करविभूषणं ॥
भर्तारमिव संप्राप्ता जानकी मुदिता भवेत् ॥। १६० ॥

ततस्सा ह्रिमती बाला भर्तृ संदेश हर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ १६१ ॥

विक्रांतस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयेकैन प्रधर्षितम् ॥ १६२ ॥

दिष्ट्याच कुशली रामो धर्मात्मा सत्यसंगरः ।
लक्ष्मणश्च महातेजाः सुमित्रानंदवर्धनः ॥ १६३ ॥

कुशली यदि काकुत् स्थः किं नु सागर मेखलाम् ।
महीम् दहति कोपेन युगांताग्निरिवोथिताः ॥ १६४ ॥

धर्मापदेशात् त्यजतश्च राज्यं
मां चाप्यरण्यं नयतः पदातिं ।
नासीद्व्यधा यस्य नभीर्नशोकः
कश्चित् स धैर्यं हृदये करोति ॥ १६५ ॥

सीताया वचनं श्रुत्वा मारुतिर्भीम विक्रमः ।
शिरस्यंजलि माधाय वाक्यमुत्तरमब्रवीत् ॥ १६६ ॥

श्रुत्वैव तु वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन् महतीं हर्यृक्षगण संकुलाम् ॥ १६७ ॥

स देवी नित्यं परितप्यमानः
त्वामेव सीतेत्यभिभाषमाणः ।
धृतवृतो राजसुतो महात्मा
तवैव लाभाय कृतप्रयत्नः ॥ १६८ ॥

सीता तद्वचनं श्रुत्वा पूर्णचंद्र निभानना ।
हनुमंतमुवाचेदं धर्मार्धसहितं वचः ॥ १६९ ॥

स वाच्यस्संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालः तावद्दि मम जीवितम् ॥
वर्तते दशमो मासो द्वौ तु शेषा प्लवंगम ॥ १७० ॥

स मे हरिश्रेष्ट स लक्ष्मणंपतिं
स यूथपं क्षिप्रमिहोपपाधय ।
चिराय रामं प्रति शोककर्शितां
कुरुष्वमां वानरमुख्य हर्षिताम् ॥ १७१ ॥

ततस्स कपिशार्दूलः तेन वाक्येन हर्षितः ।
सीतामुवाच तच्च्रुत्वा वाक्यं वाक्य विशारदः ॥
अभिज्ञानं प्रयच्च त्वं जानीयाद्राघवो हि यत् ॥। १७२ ॥

एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं मंदंभाष्पप्रग्रथिताक्षरम् ॥ १७३ ॥

इदं श्रेष्ठमभिज्ञानं ब्रूयाः त्वं तु मम प्रियम् ।
शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पुरा ॥ १७४ ॥

तापसाश्रमवासिन्याः प्राज्यमूलफलोदके ।
तस्मिन् सिद्दाश्रमे देशे मंदाकिन्या ह्यदूरतः ॥ १७५ ॥

ततो मांस समायुक्तो वायसः पर्यतुंडयत् ।
तमहं लोष्टमुद्यम्य वारयामि स्म वायसम् ॥ १७६ ॥

भाष्पपूर्णमुखी मंदं चक्षुषी परिमार्जती ।
लक्षिताहं त्वयानाथ वायसेन प्रकोपिता ॥ १७७ ॥

ततस्मिन् महाबाहुः कोपसंवर्तितेक्षणः ।
वायसे कृतवान् क्रूरां मतिं मतिमतां वरः ॥ १७८ ॥

स दर्भं संस्तराद्गृह्य ब्राह्मेणास्त्रेण योजयत् ।
स दीप्त इव कालाग्निः जज्वालाभिमुखो द्विजम् ॥ १७९ ॥

मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् ।
कस्माद्यो मा हरत् त्वत्तः क्षमसे तं महीपते ॥ १८० ॥

वैदेह्या वचनं श्रुत्वा करुणं सा श्रुभाषितम् ।
अधाब्रवीन् महा तेजा हनुमान् मारुतात्मजः ॥ १८१ ॥

त्वच्छोकविमुखो  रामो देवि सत्येन मे शपे ।
रामे दुःखाभिपन्ने  च लक्ष्मणः परितप्यते ॥ १८२ ॥

उवाच शोक संतप्ता हनूमंतं प्लवंगमम् ।
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ॥। १८३ ॥

ऊर्ध्वं मासान्नजीवेयं सत्येनाहं ब्रवीमिते ।
त्रा तु मर्हसि वीर त्वं पाताळादिव कौशिकीम् ॥ १८४ ॥

ततो वस्त्रगतं मुक्त्वा दिव्यं  चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते धदौ ॥ १८५ ॥

सीताया वचनं श्रुत्वा हनुमान् मारुतात्मजः ।
शिरस्यंजलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १८६ ॥

स गणं रावणं हत्वा राघवो रघुनंदनः ।
त्वामादाय वरारोहे स्वपुरं प्रति यास्यति ॥ १८७ ॥

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ।
उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १८८ ॥

त्वां दृष्ट्वा प्रियवक्तारं संप्रहृष्यामि वानर ।
अर्ध संजात सस्येव वृष्टिं प्राप्य वसुंधरा ॥ १८९ ॥

इमं च तीव्रं ममशोकवेगं
रक्षोभिरेभिः परिभर्तृनंच ।
ब्रूयास्तु रामस्य गतस्समीपं
शिवश्चते ध्वास्तु हरिप्रवीर ॥ १९० ॥

स राजपुत्र्याप्रतिवेदितार्धः
कपिः कृतार्धः परिहृष्टचेताः ।
अल्पावशेषं प्रसमीक्ष्य कार्यं
दिशं ह्युदीचीं मनसा जगाम ॥ १९१ ॥

अल्पशेष मिदं कार्यं दृष्टेयमसितेक्षणा ।
त्रीनुपायानतिक्रम्य चतुर्ध इह दृश्यते ॥ १९२ ॥

स तस्य कृत्वार्धपतेर्महाकपिः
महद्व्यलीकं मनसो महात्मनः ॥ १९३ ॥

ततः पक्षिनिनादेन वृक्षभंगस्वनेन च ।
बभूवुस्त्रास संभ्रांताः सर्वे लंका निवासिनः ॥ १९४ ॥

रावणस्य समीपे तु राक्षस्यो विकृताननाः ।
विरूपं वानरं भीमं  आख्यातुमुपचक्रमे ॥ १९५ ॥

अशोकवनिका मध्ये राजन् भीमवपुः कपिः   ।
सीतायाःकृतसंवादः तिष्ठत्यमितविक्रमः ॥ १९६ ॥

तेन त्वद्भुतरूपेण यत्तत् तव मनोहरम् ।
नाना मृगगणाकीर्णं प्रमृष्टं प्रमदावनम् ॥
तस्योग्ररूपस्योग्र त्वं दंड माज्ञातु मर्हसि ॥। १९७ ॥

आत्मनसदृशान् शूरान् किंकरान् नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥ १९८ ॥

हनुमानपि तेजस्वी श्रीमान् पर्वतसन्निभः ।
क्षितावाविध्य लांगूलं ननाद च महास्वनम् ॥ १९९ ॥

जयत्यति बलोरामो लक्ष्मणस्य महाबलः ।
राजाजयति सुग्रीवो राघवेणाधिपालितः ॥ २०० ॥

दाशोहं कोसलेंद्रस्य रामस्याक्लिष्ट कर्मणः ।
हनुमान् शत्रु सैन्यानां निहन्तामारुतात्मजः ॥ २०१ ॥

न रावण सहस्रं मे युद्धे प्रति बलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥
अर्धयित्वा पुरीं लंकां अभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषताम् सर्वरक्षसां ॥ २०२ ॥

स तं परिघमादाय जघान रजनीचरान् ।
स पन्नगमिवादाय स्फुरंतं विनतासुतः ॥ २०३ ॥

स राक्षसानां निहतं महाबलं
निशाम्यराजा परिवृत्तलोचनः ।
समादिदेशाप्रतिमं पराक्रमे
प्रहस्तपुत्रं समरे सुदुर्जयम् ॥ २०४ ॥

सरोष संवर्तितताम्रलोचनः
प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्रानतिवीर्यविक्रमान्
समादिदेशाशु निशाचरेश्वरः ॥ २०५ ॥

सतान् प्रवृद्धान् विनिहत्य राक्षसान्
महाबलश्चंडपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैः
तदेव वीरोभि जगाम तोरणम् ॥ २०६ ॥

हतान् मंत्रिसुतान् बुद्ध्वा वानरेण महात्मना ।
रावणस्संवृताकारः चकार मतिमुत्तमाम् ॥ २०७ ॥
स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् ।
प्रहसं भासकर्णं च पंचसेनाग्र नायकान् ॥ २०८ ॥

ततः कपिस्तान् ध्वजनीपतीन् रणे
निहत्य वीरान् सबलान् सवाहनान् ।
तदेव वीरः परिगृह्यतोरणम्
कृतक्षणः काल इव प्रजाक्षये ॥ २०९ ॥

ततस्स रक्षोधिपतिर्महात्मा
हनूमताक्षे निहते कुमारे ।
मनस्समाधाय तदेंद्रकल्पं
समादिदेशेंद्रजितं सरोषम् ॥ २१० ॥

नानाशस्त्रैश्च संग्रामे वैशारद्यमरिंदमः ।
अवस्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ २११ ॥

ततः पितुस्तद्वचनं निशम्य
प्रदक्षिणं दक्षसुत प्रभावः ।
चकार भर्तारमदीनसत्वो
रणाय वीरः प्रतिपन्न बुद्धिः ॥ २१२ ॥

हनूमतो वेद न राक्षसोंतरम्
न मारुतिस्तस्य महात्मनोंतरं ।
परस्परं निर्विषहौ बभूवतुः
समेत्य तौ देवसमान विक्रमौ ॥ २१३ ॥

अवध्योयमिति ज्ञात्वा तमस्त्रेणास्त्र तत्ववित् ।
निजग्राह महाबाहुः मारुतात्ममिंद्रजित् ॥ २१४ ॥

सवीर्यमस्त्रस्य कपिर्विचार्य
पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिंतयित्वा
पितामहाज्ञा मनुवर्तते स्म ॥ २१५ ॥

तं मत्तमिव मातंगं बद्धं कपिवरोत्तमम् ।
राक्षसा राक्षसेंद्राय रावणाय न्यवेदयन् ॥ २१६ ॥

स तैः संपीड्यमानोपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोधिपमवैक्षता ॥ २१७ ॥

अहो रूपमहोधैर्यम् अहोसत्वमहोद्युतिः ।
अहो राक्षसराजस्य सर्व लक्षणयुक्तता ॥ २१८ ॥

यद्यधर्मो न बलवान् स्यादयं राक्षसेस्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ २१९ ॥

स राजा रोषताम्राक्षः प्रहस्तं मंत्रिसत्तमम् ।
कालयुक्तमुवाचेदम् वचोविपुलमर्धवत् ॥ २२० ॥

दुरात्मा पृच्चतामेष कुतः किं वास्य कारणम् ।
वनभंगेच कोस्यार्धो राक्षसीनांच तर्जने ॥ २२१ ॥

रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वये कपे ॥ २२२ ॥

यदि तावत् त्वमिंद्रेण प्रेषितो रावणालयम् ।
तत्वमाख्याहि माभूत् ते भयं वानर मोक्ष्यसे ॥ २२३ ॥

तं समीक्ष्य महासत्वं सत्ववान् हरिसत्तमः ।
वाक्यमर्धवदव्यग्रः तं उवाच दशाननम् ॥ २२४ ॥

सत्यं राक्षस राजेंद्र शृणुष्व वचनं मम ।
रामदासस्य दूतस्य वानरस्य विषेषतः ॥ २२५ ॥

सर्वान् लोकान् सुसंहृत्य सभूतान् स चराचरान् ।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ २२६ ॥

ब्रह्मा स्वयंभू श्चतुराननोवा
रुद्रस्त्रिनेत्र स्त्रिपुरांतकोवा ।
इंद्रो महेंद्र स्सुरनायकोवा
त्रातुम् न शक्ता युधि रामवध्यम् ॥ २२७ ॥

तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्छितः ॥ २२८ ॥

निश्चितार्धस्ततस्साम्नापूज्य शत्रुजिदग्रजम् ।
उवाच हित मत्यर्धं वाक्यं वाक्य विशारदः ॥ २२९ ॥

क्षमस्व रोषं त्यज राक्षसेंद्र
प्रसीद मद्वाक्य मिदं शृणुष्व ।
वधं न कुर्वंति परावरज्ञाः
दूतस्यसंतो वसुधाधिपेंद्राः ॥ २३० ॥

तस्य तद्वचनं श्रुत्वा दशग्रीवो महाबलः ।
देशकालहितं वाक्यं भ्रातुरुत्तर मब्रवीत् ॥ २३१ ॥

कपीनां किल लांगूलम् इष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन धग्धेन गच्चतु ॥ २३२ ॥

आज्ञापयद्राक्षसेंद्रः पुरं सर्वं सचत्वरं ।
वेष्टयंतिस्म लांगूलं जीर्णैः कार्पासकैः पटैः ॥ २३३ ॥

दीप्यमाने ततस्तस्य लांगूलाग्रे हनूमतः ।
राक्षस्या स्ता विरूपाक्षः शंसुर्देव्यास्तदप्रियम् ॥ २३४ ॥

वैदेही शोकसंतप्ता हुताशनमुपागमत् । २३५ ॥

यद्यस्ति पति शुश्रूषा यद्यस्ति चरितं तपः ।
यदि चास्तेकपत्नीत्वं शीतो भव हनूमतः ॥ २३६ ॥

यदि किंचिदनुक्रोशः तस्य मय्यस्ति धीमतः ।
यदि वा भाग्यशेषोमे शीतो भव हनूमतः ॥ २३७ ॥

यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ।
स विजानाति धर्मात्मा शीतो भव हनूमतः ॥ २३८ ॥

यदि मां तारयेदार्यः सुग्रीवस्सत्यसंगरः ।
अस्माद्दुःखांबुसंरोधात् शीतो भव हनूमतः ॥ २३९ ॥

लंकां समस्तां संदीप्य लांगूलाग्निं महाबलः ।
निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ २४० ॥

संदीप्यमानां विध्वस्तां त्रस्त रक्षोगणां पुरीम् ।
अवेक्ष्य हनुमान् लंकांचिंतयामास वानरः ॥ २४१ ॥

तस्याभूत्सुमहांस्त्रासः कुत्साचात्मन्यजायत ।
लंकां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥ २४२ ॥

विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते ।
लंकायां कश्चि दुद्देशः सर्वा भस्मीकृता पुरी ॥ २४३ ॥

तपसा सत्यवाक्येन अनन्यात्वाच्च भर्तरि ।
अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २४४ ॥

स तथा चिंतयंस्तत्र देव्या धर्म परिग्रहम् ।
शुश्राव हनुमान् वाक्यं चारणानां महात्मनाम् ॥ २४५ ॥

दग्धेयं नगरी सर्वा साट्टप्राकार तोरणा ।
जानकी नच दग्धेति विस्मयो अद्भुत एव नः ॥ २४६ ॥

ततस्तु शिंशुपामूले जानकीं पर्युपस्थिताम् ।
अभिवाद्या ब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ २४७ ॥

तमारुह्य शैलेंद्रं व्यवर्धत महाकपिः ।
दक्षिणादुत्तरं पारं प्रार्धयन् लवणांभसः ॥ २४८ ॥

स मारुत इवाकाशं मारुतस्यात्मसंभवः ।
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरं दिशम् ॥ २४९ ॥

ततस्तु वेगवांस्तस्य गिरेर्गिरि निभः कपिः ।
निपपात महेंद्रस्य शिखरे पादपाकुले ॥ २५० ॥

ततस्ते प्रीतिमनसः सर्वे वानरपुंगवाः ।
हनुमंतं महात्मानं परिवार्योपतस्थिरे ॥ २५१ ॥

जांबवान् कार्यवृत्तांतं  अपृच्छदनिलात्मजम् ।
कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ॥ २५२ ॥

एतदाख्याय तत्सर्वं हनुमान् मारुतात्मजः ।
भूयस्समुपचक्राम वचनं वक्तुमुत्तरम् ॥ २५३ ॥

सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ।
शीलमासाद्य सीताया मम च प्रवणं मनः ॥ २५४ ॥

एवमास्ते महाभागा सीता शोकपरायणा ।
यदत्र प्रतिकर्तव्यं तत्सर्वमुपपद्यताम् ॥ २५५ ॥

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत  ।
अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥
समीपंगंतुमस्माभि राघवस्य महात्मनः ॥। २५६ ॥

तमेवं कृतसंकल्पं जांबवान् हरिसत्तमः ।
उवाच परमप्रीतो वाक्यमर्धवदर्धवित् ॥ २५७ ॥

न तावदेषा मतिरक्षमानो
यधा भवान् पश्यति राजपुत्र ।
यधातु रामस्य मतिर्निविष्टा
तधाभवान् पश्यतु कार्यसिद्धिम् ॥ २५८ ॥

तस्माद्गच्छाम वै सर्वे यत्र रामः स लक्ष्मणः ।
सुग्रीवश्च महातेजाः कार्यास्यास्य निवेदने ॥ २५९ ॥

ततो जांबवतो वाक्यं अगृह्णंत वनौकसः ।
अंगदप्रमुखा वीरा हनुमांश्च महाकपिः ॥ २६० ॥

प्रीतिमंतस्ततसर्वे वायुपुत्रपुरस्सराः ।
महेंद्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २६१ ॥

प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः ।
नंदनोपममासेदुः वनं द्रुमालतायुतम् ॥ २६२ ॥

ततो वनं तत्परिभक्ष्यमाणं
द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
चकारभूयो मतिमुग्रतेजा
वनस्य रक्षां प्रति वानरेभ्यः ॥ २६३ ॥

स तैः प्रवृद्धैः परिभर्त्स्यमानो
वनस्य गोप्ता हरिवीरवृद्धः ।
चकारभूयो मति मुग्रतेजा
वनस्य रक्षां प्रति वानरेभ्यः ॥ २६४ ॥

निमेषांतरमात्रेण स हि प्राप्तो वनालयः ।
सहस्रांशुतो धीमान् सुग्रीवो यत्र वानरः ॥ २६५ ॥

स दीनवदनोभूत्वा कृत्वा शिरसि चांजलिम् ।
सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ २६६ ॥

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ।
दृष्ट्वैवोद्विग्नहृदयो वाक्यमेत दुवाच ह ॥ २६७ ॥

उत्तिष्ठोत्तिष्ठ कस्मात् त्वं पादयोः पतितं मम ।
अभयं ते प्रदास्यामि सर्वमेवाभिधीयताम् ॥ २६८ ॥

नैवर् क्षरजसा राजन् न त्वया नापिवालिना ।
वनं निसृष्टपूर्वं हि भक्षितं तच्च वानरैः ॥ २६९ ॥

विचित्य दक्षिणामाशाम् आगतैर्हरिपुंगवैः ।
आगतैश्चा प्रधृष्यं तत् हतं मधुवनं किल ॥ २७० ॥

वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ।
प्रीतोस्मि सोहं यद्भुक्तंवनंतैःकृतकर्मभिः ॥ २७१ ॥

मर्षितं मर्षणियंच चेष्टितंकृतकर्मणाम् ।
गछच शीघ्रं मधुवनं संरक्षस्व त्वमेवहि ॥
शीघ्रं प्रेषय सर्वांस्तान् हनूमत्प्रमुखान् कपीन् ॥॥ २७२ ॥

स यथैवागतः पूर्वं तथैव त्वरितं गतः ।
निपपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ २७३ ॥

स तानुपागमद्वीरो बध्वा करपुटांजलिं ।
उवाच वचनं श्लक्षम् इदं हृष्टवदंगदम् ॥ २७४ ॥

प्रहृष्टो न तु रुष्टो सौ वनं श्रुत्वा प्रधर्षितम् ।
प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ २७५ ॥

शीघ्रं प्रेषय सर्वां स्तान् इतिहोवाच वानरेश्वरः ॥ २७६ ॥

ते अंगद प्रमुखाः वीराः प्रहृष्टाश्च मुदान्विताः ।
निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ २७७ ॥

हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः ।
नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ २७८ ॥

उवाच वाक्यम् वाक्यज्ञः सीताया दर्शनं यथा ।
रावणांतःपुरे रुद्दा राक्षसीभिस्सुरक्षिता ॥
एकवेणीधरा दीना त्वयि चिंतापरायणा ॥॥ २७९ ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्व मेवानुपूर्व्यात्
वाचा संपूर्ण वायुपुत्र श्शशांस ॥ २८० ॥

एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं मणिं हृदये कृत्वा प्ररुरोद स लक्ष्मणः ॥ २८१ ॥

किमाहा सीता हनुमन् तत्त्वतः कधयाद्य मे ।
एतेन खलु जीविष्ये भेषजेनातुरो यधा ॥ २८२ ॥

एव मुक्तस्तु हनुमान् राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ २८३ ॥

इदमुक्तवती देवी जानकी पुरुषर्षभा ।
पूर्व वृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २८४ ॥

तस्य वीर्यव्रतः कश्चित् यद्यस्ति मयि संभ्रमः ।
क्षिप्रं सुनिशितैर्बाणैः हन्यतां युधि रावणः ॥ २८५ ॥

वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् ।
पुनरप्यहमार्यां ताम् इदं वचनमब्रवीत् ॥ २८६ ॥

हत्वाच समरे रौद्रं रावणं सहबांधवान् ।
राघवस्त्वां वरारोहे स्वां पुरीं नयते ध्रुवम् ॥ २८७ ॥

निवृत्त वनवासं च त्वया सार्धमरिंदमम् ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८८ ॥

ततो मया वाग्भिरदीन भाषिणा
शिवाभिरिष्टाभिरभिप्रसादिता ।
जगाम शांतिं मम मैथिलात्मजा
तवातिशोकेन तथाति पीडिता ॥ २८९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
सुंदराकांडम् समाप्तं

ॐ तत् सत्

ॐ

## संक्षिप्त सुंदरकांड

रामायण पारायण समापन श्लोकगळु

स्वस्ति प्रजाभ्यां परिपालयंतां न्यायेणमार्गेण महीं महीशाः
गोब्राह्मणेभ्यः शुभमस्तु नित्यंलोकासमस्ताः सुखिनो भवंतु
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी
देशोयं शोभरहितः ब्राह्मणाः संतु निर्भयाः
सर्वेषां स्वस्तिर्भवतु सर्वेषां शांतिर्भवतु
सर्वेषां पूर्णं भवतु सर्वेषां मंगळं भवतु
सर्वे भवंतु सुखिनः सर्वेसंतु निरामयाः
सर्वे भद्राणि पश्यंतु माकश्चित् दुःखभाधवेत्

मंगळं कोसलेंद्राय महनीय गुणाब्दये
चक्रवर्ति तनूजाय सार्वभौमाय मंगळम्

कायेनवाचा मनसेंद्रियैर्वा बुध्यात्मना वा प्रकृतेः स्वभावात्
करोमि यद्यत् सकलं परस्मै नारयणायेति समर्पयामि

यदक्षर पदभ्रष्टं मात्राहीनंच यद्भवेत्
तत्सर्वं क्षम्यतां देव श्रीरामो नमोस्तुते

पारायण समाप्तं

ॐ

शांतिः शांतिः शांतिः ॥।